# महेश्वरानन्दप्रणीता महार्थमञ्जरी

नमो नालयते शुण्डां विषाणेन मृणालिने ।
प्रत्यक्कमलकन्दाय कर्णाभ्यां पर्णशालिने ॥ १॥

जयत्यमूलमम्लानमौत्तरं तत्त्वमद्वयम् ।
स्पन्दास्पन्दपरिस्पन्दमकरन्दमहोत्पलम् ॥ २॥

कारुण्यामृतसिन्धोरुदितमिवावर्तमीक्षणापाङ्गात् ।
मौक्तिकमयं दधाना ताटङ्कं जयति गौरवी मूर्तिः ॥ ३॥

स्फूर्तये विश्वशिल्पस्य श्रीशिवानन्दमूर्तये ।
नित्योन्मेषनिमेषायै निस्तुषायै नमस्त्विषे ॥ ४॥

यस्मादनुत्तरमहाह्रदमज्जनं मे
सौभाग्यशाम्भवसुखानुभवश्च यस्मात् ।
तत्स्वात्मचित्क्रमविमर्शमयं गुरूणा-
मोवल्लियुग्ममुदितोदितवीर्यमीडे ॥ ५॥

नमो निखिलमालिन्यविलापनपटीयसे ।
महाप्रकाशपादाब्जपरागपरमाणवे ॥ ६॥

गोरक्षो लोकधिया देशिकदृष्ट्या महेश्वरानन्दः ।
उन्मीलयामि परिमलमन्तर्ग्राह्य महार्थमञ्जर्याम् ॥ ७॥

स्वक्रियायां अपि व्याख्यां स्वयमेव प्रयुञ्ज्महे ।
उपर्यप्यात्मसरम्भसम्भोगाम्रेडनोत्सुकाः ॥ ८॥

यद्वा विनेयजनचित्तचमत्क्रियार्थ-
मत्रोद्यमोऽयमुदितोऽस्तु तदेतदास्ताम् ।
सङ्क्षेपविस्तरविभागविविक्तशोभः
पुष्पाञ्जलिर्भवतु वाङ्मय एष शम्भोः ॥ ९॥

अवगतशिवदृष्टिप्रत्यभिज्ञार्थतत्त्व-
क्रमसरणिरहस्योल्लाससर्वस्ववेदी ।
गुरुचरणसपर्याचातुरीचिद्घनोऽहं
गहनमपि हृदन्तर्व्योम तद्व्याकरोमि ॥ १०॥

इह महति रहस्योन्मीलने मङ्गलाय
प्रभवति मम संविद्योगिनीनां प्रसादः ।
अति तु कुलसपर्याबिम्बसबन्ध्यवन्ध्याः
सकृदपि मतिमन्तो नैनमुद्घाटयन्तु ॥ ११॥

स्वप्नसमयोपलब्धा सा सुमुखी सिद्धयोगिनी देवी ।
गाथाभिः सप्तत्या स्वापितभाषाभिरस्तु सम्प्रीता ॥ १२॥

वर्धतां देशिकः श्रीमान् संविन्मार्गश्च वर्धताम् ।
माहेश्वराश्च वर्धन्तां वर्धतां च महेश्वरः ॥ १३॥

॥ अथ महार्थमञ्जरी ॥

नत्वा नित्यशुद्धौ गुरोश्चरणौ महाप्रकाशस्य ।
ग्रथ्नाति महार्थमञ्जरीमिमां सुरभिं महेश्वरानन्दः ॥ १॥

वर्धतां महाप्रकाशो विमर्शविच्छुरितनिश्छलोद्योतः ।
संज्ञाविशेषनिर्णयमात्रप्रवृत्तानि यत्र शास्त्राणि ॥ २॥

आत्मा खलु विश्वमूलं तत्र प्रमाणं न कोऽप्यर्थयते ।
कस्य वा भवति पिपासा गङ्गास्रोतसि निमग्नस्य ॥ ३॥

यं जानन्ति जडा अपि जलहार्योऽपि यं विजानन्ति ।
यस्यैव नमस्कारः स कस्य स्फुटो न भवति कुलनाथः ॥ ४॥

अवच्छिन्नं प्रत्यक्षमवच्छिन्नं तन्मुखं चानुमानम् ।
आगमदीपालोकस्तस्य प्रकाशयति किमपि माहात्म्यम् ॥ ५॥

येषां निरुपणीयो व्यतिरिक्तः कोऽप्यात्मनो भावः ।
आत्मविमुखानां तेषामधिकारिविभागविभ्रमो भवतु ॥ ६॥

यत्र रुचिस्तत्र विधिर्यत्रेयं नास्ति तत्र च निषेधः ।
इत्यस्माकं विवेको हृदयपरिस्पन्दमात्रशास्त्राणाम् ॥ ७॥

पर्यालोचनविमुखे वस्तुस्वभावस्यात्मनो हृदये ।
शङ्काविषवेगेनेव संसारभयेन मुह्यति लोकः ॥ ८॥

माणिक्यप्रवेक इव निचोलितो निजमयूखलेखया ।

प्रतिभाति लौकिकानामत्यन्तस्फुटोऽप्यस्फुट आत्मा ॥ ९॥

ऊर्ध्वो ज्वलति प्रकाशो लोकालोकस्य मङ्गलप्रदीपः ।
विमर्शदशामुखानीतदह्यमानमलालितैलविच्छर्दः ॥ १०॥

(विमर्शदशामुखेन दह्यते मलालितैलनिष्यन्दः )

सन्नैव हृदयप्रकाशो भवनक्रियाया भवति कर्ता ।
सैव क्रियाविमर्शः स्वस्था क्षुभिता च विश्वविस्तारः ॥ ११॥

पृथ्वीपरमशिवयोः प्रत्याहारे प्रकाशपरमार्थे ।
योऽन्योन्यविशेषः स एव हृदयस्य विमर्शोन्मेषः ॥ १२॥

तथा तथा दृश्यमानानां शक्तिसहस्राणामेकसङ्घट्टः ।
निजहृदयोद्यमरूपो भवति शिवो नाम परमस्वच्छन्दः ॥ १३॥

स एव विश्वमीक्षितुं स्थातुं कर्तुं चोन्मुखो भवन् ।
शक्तिस्वभावः कथितो हृदयत्रिकोणमधुमासलोल्लासः ॥ १४॥

ज्ञानं क्रियेति द्वयोरपि प्रथमोन्मेषे सदाशिवो देवः ।
द्वितीयाया उल्लेखे द्वितीयः स भवतीश्वरो नाम ॥ १५॥

ज्ञाता स आत्मा ज्ञेयस्वभावश्च लोकव्यवहारः ।
(ज्ञातृत्वधर्मा आत्मा )
एकरसां संसृष्टिं यत्र गतौ सा खलु निस्तुषा विद्या ॥ १६॥

एकरसे स्वभावे उद्भावयन्ती विकल्पशिल्पानि ।
मायेति लोकपतेः परमस्वतन्त्रस्य मोहनी शक्तिः ॥ १७॥

सर्वकरः सर्वज्ञः पूर्णो नित्योऽसङ्कुचितश्च ।
विपरीत इव महेशो याभिस्ता भवन्ति पञ्चशक्तयः ॥ १८॥

य एष विश्वनाटकशैलूषः शुद्धसंविच्छम्भुः ।
वर्णकपरिग्रहमयी तस्य दशा कापि पुरुषो भवति ॥ १९॥

ज्ञानक्रियामायानां गुणानां सत्त्वरजस्तमस्स्वभावानाम् ।
अविभागावस्थायां तत्त्वं प्रकृतिरिति शाम्भवी शक्तिः ॥ २०॥

कल्लोलायमानानि सदा हृदयाम्बुनिधौ त्रीणि करणानि ।
आकर्षन्तीदन्तां तत्राहन्तां (तथा अहन्तां) चात्रार्पयन्ति ॥ २१॥

हृदयस्थितस्य विभोर्विषयालोको विशृङ्खलो भवति ।
ज्ञानेन्द्रियदीपेषु निजनिजगोलाग्रनित्यलग्नेषु ॥ २२॥

भवन्ति करणानि पञ्च खलु कर्मप्रधानानि लोकनाथस्य ।
स्पन्दते स्वैरं यैर्जनो जडाद्विलक्षणो भवन् ॥ २३॥

विश्वोद्यानविरूढानि गन्धप्रमुखानि सुगन्धीनि पुष्पाणि ।
पञ्चाप्याजिघ्रन् क्रीडति त्रैलोक्यधूर्तो देवः ॥ २४॥

स्त्यानस्य क्रमवशादिक्षुरसस्येव शिवप्रकाशस्य ।
गुडपिण्डा इव पञ्चापि भूतानि मधुरतां न मुञ्चन्ति ॥ २५॥

सर्वस्य भुवनविभ्रमयन्त्रोल्लासस्य तन्तुवल्लीव ।
विमर्शसंरम्भमयी उज्जृम्भते शम्भोर्महाशक्तिः ॥ २६॥

यदध्वनां च षट्कं तत्र प्रकाशार्थलक्षणमर्धम् ।
विमर्शशब्दस्वभावमर्धमिति शिवस्य यामलोल्लासः ॥ २७॥

आलेख्यविशेष इव गजवृषभयोर्द्वयः प्रतिभासः ।
एकस्मिन्नेवार्थे शिवशक्तिविभागकल्पनां कुर्मः ॥ २८॥

तिलमात्रेऽपि शरीरे प्रेक्षध्वं कीटस्यैतावती शक्तिः ।
सा स्वच्छन्दश्रियो विश्वशरीरस्य कियती भवतु ॥ २९॥

विश्वोन्मेषदशायां देशिकनाथस्य यावान्प्रसरः ।
कललावस्थयां (स्थितोऽपि) विश्वनिमेषेऽपि तावान्भवति ॥ ३०॥

त्रिपुटीमयं खलु समस्तं तत्र च ज्ञेये ज्ञातरि च समम् ।
दृढग्रन्थिर्ज्ञानकला कलयति त्रैलोक्यमेककलम् ॥ ३१॥

कः सद्भावविशेषः कुसुमाद्भवति गगनकुसुमस्य ।
यत्स्फुरणानुप्राणो लोकः स्फुरणं च सर्वसामान्यम् ॥ ३२॥

माणिक्यमरतकयोरिव भावाभावयोर्भेदप्रतिभासम् ।
एकरसोऽन्योन्य द्वयोरप्युन्मार्ष्टि (द्वयोः प्रमार्ष्टि) स्फुरणसम्भेदः ॥ ३३॥

अण्डमये निजपिण्डपीठे स्फुरन्ति करणदेव्यः ।
प्रस्फुरति च परमशिवो ज्ञाननिधिश्च तासां मध्ये ॥ ३४॥

स तत्रार्चनीयो विमर्शपुष्पाधिवाससुरभिभिः ।
चित्तचषकार्पितैर्वेद्यसुधावीरपानवस्तुभिः ॥ ३५॥

श्रीपीठपञ्चवाहो नेत्रत्रयवृन्दचक्राणि स्मरत ।
स्मरत च गुरूणां पङ्क्ति पञ्च च शक्तीः सृष्टिप्रमुखाः ॥ ३६॥ (४१)

पीठे कला नव पञ्चैव पञ्चवाहपदव्याम् ।
सप्तदश फा(भा)लनेत्रे द्वादश षोडश चान्यनेत्रयोः ॥ ३७॥ (४२)

प्रकटितपञ्चस्कन्धे चतुष्षष्टिर्भवन्ति वृन्दचक्रे ।
न खलु मण्डले गुरूणां नियमो नियमातिलङ्घिना (नियमानलं विना) युक्तः ॥ ३८॥ (४३)

सृष्टौ दश कलाः स्थितौ द्वाविशतिर्भवन्ति शक्तयः ।
एकादश संहारे त्रयोदश तास्तुरीयपर्वणि ॥ ३९॥ (४४)

भासायां न विकल्पाः स्फुरति स्फुरदेकनिष्कलश्रियाम् ।
यदि प्रतिबिम्बगत्या स्फुरति परं षोडशाधिका देवी ॥ ४०॥ (४५)

सृष्टेः पञ्चमकला भासेति(पञ्चकलाभासे) जनो गणयति व्यवधानम् ।
(सृष्टेर्मूलकन्दो भासा भासायाः) सृष्टेर्मूलस्कन्धे भासायां पल्लवः सृष्टिः ॥ ४१॥ (४६)

निजबलनिभालनमेव वरिवस्या सा च दुर्लभा लोके ।
सुलभानि विश्वपतेरासवताम्बूलगन्धपुष्पाणि ॥ ४२॥ (३६)

विमृष्टुं निजसत्त्वं विभवे कार्योन्मुखे स्तिमितेऽपि ।
बाह्यवृत्तान्तानां भङ्गः प्राणस्य संयमो ज्ञेयः ॥ ४३॥ (३७)

शोषो मलस्य नाशो दाह एतस्य वासनोच्छेदः ।
आप्लावनं तनूनां ज्ञानसुधासेकनिर्मिता शुद्धिः ॥ ४४॥ (३८)

अविकल्पतया विमर्शो विकल्पवर्गस्याङ्गसन्नाहः ।
अर्घ्यं वेद्यविलासः पुष्पाणि स्वभावपोषकाः भावाः ॥ ४५॥ (३९)

पूर्णाहन्ताया मुखे विश्वविकल्पाङ्कुराणां विक्षेपम् ।

मन्त्रोल्लेखविशुद्धं पुण्यं कुलबिन्दुतर्पणं भणामः ॥ ४६॥ (४०)

यो यस्य भावयोगस्तस्य खलु स एव देवता भवति ।
तद्भावभाविता अभिलषित तथा फलन्ति प्रतिमाः ॥ ४७॥

चित्रं न लिखति चित्रं चित्रकरः पश्यत लिखति तच्चित्रम् ।
तद् भणत कुत्र योग्या कर्तुं द्वयोरपि (रिति) देवताबुद्धिः ॥ ४८॥ (४७)

मननमयी निजविभवे निजसङ्कोचभये त्राणमयी ।
कवलितविश्वविकल्पा अनुभूतिः कापि मन्त्रशब्दार्थः ॥ ४९॥ (४८)

वैखरि(का) नाम क्रिया ज्ञानमयी भवति मध्यमा वाक् ।
इच्छा पुनः पश्यन्ती सूक्ष्मा सर्वासा समरसा वृत्तिः ॥ ५०॥ (४९)

आनन्दोल्लासश्रीः क्षुल्लकिताष्टमहासिद्धिसौभाग्या ।
दृश्यते यत्र दशायां सैव देवस्य सर्व(महा)मुद्राः ॥ ५१॥ (५०)

हृदयस्थानप्ररूढो विमर्शकल्पद्रुमो महाशाखः ।
पुष्प्यति भोगश्रिया फलति च निष्कलसुखोत्सवालोकम् ॥ ५२॥ (५१)

क्रमिको भवति न देवस्तस्य कथं कालकल्मषस्पर्शः ।
नित्यनिरावरणस्यापि (को जीवतो मोक्षप्रत्यूहः) कोऽपि जीवन्मुक्तिप्रत्यूहः ॥ ५३॥ (५२)

यत् किमपि येन केनापि रूपेण यत्र कुत्रापि किं नास्ति ।
तस्मादात्मा नित्यस्थिरः क्षणभङ्ग एवास्थिरो भवति ॥ ५४॥ (५३)

नन्वात्मनः प्रियार्थं सर्वस्य प्रियत्वं भणति श्रुतिः ।
तस्मादानन्दस्वभाव आत्मा मुक्तोऽमुक्तो वा ॥ ५५॥ (५४)

यदि निजहृदयोल्लासं निर्णेतुं नित्यनिष्कलमिच्छा ।
मध्यतुटिस्त्रुटितव्या अस्तङ्गतयोः सोमसूर्ययोस्तर्हि ॥ ५६॥ (५५)
(मध्यतुटिस्त्रुटितव्याऽस्त्र यतोः सोमसूर्ययोः ॥)

स्थूलतरेष्वपि प्रेक्षध्वं भूतेषु खस्य निष्कलावस्थाम् ।
षट्त्रिंशिकातिलङ्घी कीदृशो भवतु सोमनाथः ॥ ५७॥ (५६)

ये कुलकुम्भसुधासवपानमहामखोत्सवे(महोत्सवसुखे) प्रवर्तन्ते ।
ते खलु विकल्पाङ्कुरसिका (विकल्पाङ्कुरान् रसिका) उपदष्टुं प्रगल्भन्ते ॥ ५८॥ (५७)

हन्त मुखं प्रतिबिम्बतु प्रतिबिम्बयतु तथा तदपि दर्पणः ।
दर्पणः पुनर्यस्मिन् प्रतिबिम्बति सोऽपि ज्ञातव्यः ॥ ५९॥ (५८)

अविकारोभयपार्श्वे चाषपिञ्जसदृक्षेऽर्थे ।
अन्तर्मुखो योगी बहिर्मुख इति कल्पना कुतः ॥ ६०॥ (५९)

योगी जागरस्वप्नसुषुप्त्यवस्थात्रयस्य(सौषुप्ततुरीयपर्व)परिपाटिम् ।
चित्रामिव मणिमालां विमर्शसूत्रैकगुम्फितामुद्वहति ॥ ६१॥ (६०)

उल्लोकानन्दसुधाशीधुरसोद्वेजितेन हृदयेन ।
अभिलषति लोकयात्रां तिन्तिणिचर्वणरसान्तरं योगी ॥ ६२॥ (६१)

याभिर्गृह्णाति योगी करणप्रणालीभिर्विषयसौख्यानि ।
निजहृदयोद्वमनशीलाभिः स्फुरणमय ताभिः करोति त्रैलोक्यम् ॥ ६३॥ (६२)

यथा तव स्थितिस्तथास्स्व निश्चिन्त इति ((खलु) प्रतिष्ठितोऽर्थः ।
तत्राप्यस्ति विवेक एवमुपदिशति त(क)स्य कोऽन्यः ॥ ६४॥ (६३)

अहो संसारसुखकेली (संसारसुखातिशयः) अहो सुलभं मोक्षमार्गे सौभाग्यम्
(मोक्षमार्गसौभाग्यम्) ।
त्रुटितातङ्ककलङ्का अहो शिवयोगिनां यामली सिद्धिः ॥ ६५॥ (६४)

क्षणमात्रस्पृष्टेनाप्यमृतस्वभावेन ज्ञानभावेन ।
सर्वोत्तिर्णः सर्वः सर्वचिरं लभते सर्वसौभाग्यम् ॥ ६६॥ (६६)

गूढाद्गुढतरो  यो भवति स्फुटादपि स्फुटतर एषः ।
दैशिककटाक्षपाते पक्षः प्रथमो न भवति धन्यानाम् ॥ ६७॥ (६६)

आस्तामन्या विद्याश्चतुःस्रोतसामपि सागराणामिव ।
एनमेवामृतमयं मथ्नाति मन्थानभैरवो देवः ॥ ६८॥ (६७)

हन्त रहस्यं भणामो मुढा  मा भ्रमत गर्भगोलेषु ।
अत्यासन्न हृदय पर्यालोचयत तस्योद्योगम् ॥ ६९॥

एनमेव महार्थं युद्धारम्भे पाण्डुपुत्रस्य ।
षोडशसहस्रशक्तिर्देव उपदिशति स्म माधवः (इति शिवम्) ॥ ७०॥ (६९)

इत्थं प्राकृतसूत्रसप्ततिसमुल्लासैकसन्धायिनीं
जाग्रत्तत्क्षणनिर्विशेषस्वप्नावतीर्णां प्रतिज्ञोत्तराम् ।
लोकोल्लङ्घनयोग्यसिद्धिपदवीप्रस्थानबद्धोद्यमां
कन्थाशूलकपालमात्रविभवां वन्दे तां योगिनीम् ॥ ७१ ॥ (७०)

इति गुरुमुखाम्नायन्यायान्महाक्रममञ्जरी-
परिमलमिमं शिष्यप्रेम्णा बबन्ध महेश्वरः ।
कनकसदसो मध्ये नृत्यन्निव प्रभुरद्भुतं
यदिह सुलभः साक्षात्कर्तुं विमर्शमयः शिवः ॥

गाथानामनुभाषणं तदनु तच्छाया ततो व्याकृति-
र्ग्रन्थार्थग्रथनक्रियासु गहनो हृद्यश्च कश्चित् क्रमः ।
संवादोक्तिसहस्रसङ्कलनया तत्त्वार्थचर्चोत्सवः
सौभाग्यश्च विमर्शसम्पद इति प्रस्थानमध्यक्ष्यताम् ॥

चोलास्ते सततोत्सवा जनपदाः श्लाघ्यो गुणैर्माधवो
रेतोधाः स्फटिकावदातहृदयो नाथः प्रकशो महान् ।
स्रोतः स्वच्छमनुत्तरं परिणतं पाण्डित्यमास्थाधिका
वश्या वागिति हन्त तन्त्रकृदसौ सर्वोत्तरो वर्तते ॥

यो मे वामचमत्क्रियोद्यममयः स्तब्धोऽपि सन्नश्नुते
विश्वं व्याप्नुवतश्चिदद्वयमहश्चन्द्रोदयाद् विक्रियाम् ।
तस्याह्लादमहार्णवस्य न कथं वर्धेत कूलङ्कषो
वाग्विक्षोभविजृम्भया बहुमुखं कल्लोलहल्लोहलः ॥

कावेर्या इव माधुर्यं कह्लारस्येव सौरभम् ।
नटेशस्येव तन्नृत्तमस्य ग्रन्थस्य गौरवम् ॥

विश्वोत्पत्तिविपत्तिभूः स भगवानत्र प्रवक्ता शिव-
स्तस्याहं प्रतिशब्दपर्वतगुहा यन्मे न गर्वग्रहः ।
तद्दोषोऽस्तु गुणोऽपि वा न खलु तत् स्वायत्तमित्थं स्थिते
मात्सर्यं महतामुदेतु यदि वा वात्सल्यमुज्जृम्भताम् ॥

अधिवासयतु सदा मुखमन्यकथालेपलब्धदौर्गन्ध्यम् ।
कर्पूरशकल इव मे शिव शिव इति शीतलः शब्दः ॥

॥ इति श्रीगोरक्षापरपर्यायमहेश्वरानन्दविरचिता
महार्थमञ्जरी समाप्ता ॥

कालचक्रघटीयन्त्रकल्पनामूलशिल्पिने ।
नम्ः स्वच्छन्दचिन्मात्रपरिबर्हाय शम्भवे ॥

पादुकोदयमहार्थमञ्जरीकोमलास्तवपरास्तुतिक्रमैः ।
स्फारयन् भुवि महार्थसंविदं देशिको विजयते महेश्वरः ॥

जयत्यमूलमम्लाममौतरं तत्त्वमद्वयम्
स्पन्दास्पन्दपरिस्पन्दमकरदमहोत्पलम् ॥

॥ शुभमस्तु ॥